ஸம்ஸ்க்ருதஸ்ரீ:

# ॥ संस्कृतश्रीः ॥

संस्कृतविद्यासमिति पत्रिका

SAMSKRTASRI

ஸம்ஸ்க்ருதஸ்ரீ

A Fortnightly Bulletin of the Samskrit Education Society, Madras.







Annual Subscription Rs. 8-00

Single Copy 0-40 Ps.

Life Subscription Rs. 100-00

9, Single Mall Street, Tiruchirapalli-620 002.

माला—4 पुष्पम्—19


वाग्देव्यै नमः

वाणीं पूर्णनिशाकरोज्ज्वलमुखीं कर्पूरकुन्दप्रभां
चन्द्रार्धांकितमस्तकां निजकरैः संबिभ्रतीमादरात् ।
वीणामक्षगुणं सुधाढ्यकलशं विद्यां च तुंगस्तनीं
दिव्यैराभरणैर्विभूषिततनुं हंसाधिरूढां भजे ॥

विस्मयः सर्वथा हेयः प्रत्यूहः सर्वकर्मणाम् ।
तस्माद्विस्मयमुत्सृज्य साध्यसिद्धिर्विधीयताम् ॥

[பெருமிதம் எப்போதும் தவிர்க்கத்தக்கது. எந்தப் பணிக்கும் அது இடையூறாகும். பெருமிதத்தைத் தவிர்த்துச் செயலாற்ற வேண்டியதைச் செய்து முடிக்கவேண்டும்.]



१

श्रीगुरुभ्यो नमः

# ॥ संस्कृतश्रीः ॥

कलि 5083-दुर्मति-कर्कटक-7 (4-19) 22—7—81

अरिदरगदाब्जहस्ता किरीटकेयूरहारसंभिन्ना ।
सुवतु धियं सवितुरियं शक्तिः सुकृते शुभं सुताम् ॥

## देशाटनं नाम माधूकरम्

शिवेरा

चिराय दिदृक्षितो भगवान् वेंकटेशः । स मम कुलदैवतम् । विचित्रा विलक्षणा च तस्य जनधनाकर्षणशक्तिः । महती मूर्तिः, तथापि बाल इत्यभिधा । अपर्णासहजातोऽपि स बहुगुणः । श्रीनिवासोऽपि स्वर्णापनयनाय भक्तजनदोग्धा । आत्मारामोऽपि बहुजनसंमर्दवर्शनकामी न कदाप्येकान्ते रमते । अवाप्तसमस्तकामोऽपि भक्तश्रीप्रणयनकुतुकी । "न श्रीर्विरक्तमपि मां विजहाति" इति स्वयं वक्ति । "वव्रे वरं सर्वगुणैरपेक्षितं रमा मुकुन्दं निरपेक्षमीप्सितम्" इति लक्ष्मीदेव्या अनुभवः । परं भक्तश्रीग्रहणाय "भयकृत् भयनाशनः" इति सहस्रनामगतनामद्वयस्य सार्थक्यमसकृत् विदधाति । इति बहुधा तमपलपन्तः कोटिशस्तमनुधावन्ति "अजातपक्षा इव मातरं खगाः स्तन्यं यथा वत्सतराः क्षुधार्ताः । प्रियं प्रियेव व्युषितं विषण्णा मनः अरविन्दाक्ष दिदृक्षते त्वाम् ॥" इति समः सर्वेषां तत्रानुभवः ।

श्रीशंकरभगवत्पादा अमुमेव विष्णुपादादिकेशान्तस्तोत्रेण तुष्टुवुरिति प्रसिद्धिः । शैल्यत्र स्तोत्रे निसर्गतः कठिना तदितरग्रन्थेष्वनु-

पलभ्यमाना । भाग्यवशात् श्रीवेङ्कटेशदर्शनमवाप्तवतः तस्य तेन स्तोत्रेण तुष्टिर्जाता । पादादिकेशान्तं रम्यमस्य विग्रहं स्तोत्रगतनिरूपणैः विमृशतः, तिलकं तदाधारं फालदेशं च वर्णयतोः श्लोकयोर्मनो लग्नमिव ।

रूक्षस्मारेक्षुचापच्युतशरनिकरक्षीणलक्ष्मीकटाक्ष–
प्रोत्फुल्लत्पद्ममालाविलसितमहितस्फाटिकेशानलिंगम् ।
भूयाद्भूयो विभूत्यै मम भुवनपतेर्भ्रूलताद्वन्द्वमध्यात्
उत्थं तत्पुण्ड्रमूर्ध्वं जनिमरणतमःखण्डनं मण्डनं च ॥

"भगवतो मेघश्यामस्य विशालः फालदेशः । भुवनपतेः तस्य भ्रूलताद्वन्द्वमध्यात् उत्थितं, फालदेशं निखिलमाक्रामत् , ऊर्ध्वपुण्ड्रं मण्डनायते । सितं विमलं निर्विवरं वृत्तोन्नतं दीपशिखाकारं सितकर्पूरक्षोदसंपन्नं तत्प्रकाशते मेघश्यामलायां मूर्तौ । वदनपुण्डरीकं नयनपुण्डरीकं च पुण्ड्रवशादतिकमनीयम् । तन्मुखमण्डलमण्डनं पुण्ड्रं साग्रहं सलज्जं प्रेक्षते श्रीः । मातर्यपि कामः स्वं बलं प्रयुंक्ते । स तथाविधः । कुत्रापि न स स्निह्यति कस्मैचिदपि । न केवलं स एव रूक्षः, तस्य चापः, तन्निःसृताः शरनिकराश्च तथा । रूक्ष स्मारे-क्षुचापच्युतशरनिकरैः क्रमेण क्षीणबला श्रीः त्रातारमभिकाङ्क्षन्ती भयकारणं तदेव पुण्ड्रमुपधावति भयनाशनं भवेति प्रार्थनया । भयोत्पादने कामरूपं पुण्ड्रमेव भयनाशने कामजेतृरूपं धत्ते । निर्मलस्फटिकाकृति ऐशानं लिंगं पुरतः स्फुरति, यं महयितुं सपर्यासंभारसंकलनेऽलब्धावकाशा श्रीः, स्वकीयां दृष्टिमेव प्रोत्फुल्लत्पद्ममालां भावयन्ती, तया महयति ऐशानं लिङ्गम् । भ्रूमध्यादुत्थितं तत्परं तेजः पुण्ड्रात्मना जनिमरणतमःखण्डनं भवति इति श्रियाः कामवेदनापनयने प्रभवतीति किमु वक्तव्यम् ? तन्मम

विभूत्यै भूयात् । " ऐशानलिङ्गरूपं पुण्ड्रं विभूतिं दद्यादिति व्यतिकरोऽपि अत्र रस्यः ।

पीठीभूतालकान्तं कृतमकुटमहादेवलिंगप्रतिष्ठे
लालाटे नाट्यरंगे विकटतरतटे कैटभारेश्चिराय ।
प्रोद्धाट्यैवात्मतन्द्रीप्रकटपटकुटीं प्रस्फुरन्ती स्फुटांगं
पट्वीयं भावनाख्यां चटुलमतिनटी नाटिकां नाटयेन्नः ॥

कदाचिदेवमपि स्यात् । श्रीवेङ्कटेश्वरं पुरः प्रेक्षमाणानां भगवत्-पादानां काचिदन्या मूर्तिः पूर्वदृष्टा स्मृतिपथमायाता । सा हि पुण्डरीकवरदमूर्तिः पण्ढरपुरस्था । तस्य हि शिरसि महादेवो लिंगाकृतिः टोपारूपेण प्रकाशते इति प्रसिद्धिः । शिवरहस्ये पञ्चमे अंशे (८६ अ) काचन कथा—" भीमेश्वरे श्वेतो नाम राजा शिवमाराराध रात्रिन्दिवमनारतम् । कालभेद एव न ज्ञातस्तेन । तथा सपर्यां कुर्वन् कालं मृत्युमपि जीर्णमकुरुतेति कालञ्जरो नाम स देशः प्रसिद्धः । तत्र भगवान् विष्णुः विष्णुसवेन भगवन्तं परमेश्वरं यज्ञपुरुषमाराराध, येन प्रीतः शिवः तच्छिरः स्वावासमकरोत् । आत्मनः शिरसि कृतमहादेव लिंगप्रतिष्ठो नारायणो भगवान् " । पाण्डुरङ्गनाम्नाऽद्यापि तथैव तिष्ठति पुण्डरीकवरदवेषेण । तामपि कथामत्र स्मरन्तीव भगवत्पादाः ।

परमेश्वरज्योतिर्लिंगप्रतिच्छन्दस्य महादेवलिंगस्य प्रतिष्ठापना कृता तदेव मकुटं वृत्तोन्नतं प्रभामयम् । तत्पीठतया ललाटोपरिभागः अलकान्तं विराजते, तथा कृता लिंगप्रतिष्ठा । विकटतरतटमतिविस्तीर्णं भगवतः कैटभारेः ललाटतटं तदधः । उत्तमदेवतासन्निधौ तदाराधनाय नर्तनादि प्रवर्तेत । मकुटरूपस्य महादेवस्य पुरतोऽतिविस्तृता ललाटतटी

नाट्यरंगतामापन्ना । तं रङ्गं प्रविशति नटी काचिदुत्तमा । कैषा ? चटुला नः मतिनटी किल सा ? एतावन्तं कालं कुत्र साऽनयत , कथं प्रच्छन्ना अभवत् ? स्वीयां तन्द्रां, कर्तव्येष्वप्रवृत्तिरूपां मन्दतामेव प्रकटपटकुटीं यवनिकां, नर्तनपूर्वालंकरणसज्जीकरणादिविषये स्वतिरोधापनाय पुरोऽकरोत् । इदानीं सा तन्द्रा अपगता । चटुलता आननाग्रं व्याप्ता । ततस्तां तन्द्रां आक्षिप्य, पटकुटीं प्रोद्धाट्य स्फुटांगं प्रस्फुरन्ती बहिरागता । भगवदुपगमने सज्जा मतिः भक्तिविरक्तिशान्त्यादिकं स्वाङ्गजातं स्फुटतया भावुकस्य भगवतः पुरतः स्फुरणेन प्रकाशयति । नटनान्ते विस्फुरणं (अलारिप्पु) नाम भावुकचित्तस्तंभनं, किमपि नृत्तकर्म, यदा भावुकाः स्वस्थितिमेव विस्मरन्ति । तादृशी नाटिका नटनविशेषः भावनाख्या स्वस्वरूपविस्मृत्याख्या, तां मम मतिनटी नाटयेत् । सर्वात्मना मनोवृत्तिक्षयरूपां भगवदेकानुसन्धानरूपां चिराय नाटयेत् प्रयुंक्ताम् " ॥

श्लोकद्वयलग्नमनसा किमपि कृतं, तन्न जाने । ' चल चल अपेहि अपेहि ' इति शब्दः तत्रस्थवेत्रपाणिवाङ्निःसृतः मां ततो बहिर्निरक्रामयत् । न मे भगवतो वेङ्कटेशस्य लीलायाथार्थ्यावगमे, भगवत्पादस्तुतिप्रतिपाद्ययाथार्थ्यावगमे वा शक्तिः, ततस्ततोऽपेहीति श्रवणेन न लूनं मनः । परं, भगवान् तथापि स्यात् ? इति विचिन्तावागुरायां लग्नं मनो न ततोऽपैतीति न नः कश्चिदपराधः ।

## धीरः कोऽपि समुद्धरिष्यति

१ आचारव्यवहार संस्कृतितपोऽनुष्ठानयागादिभिः

याऽऽदर्शो भवति स्म सर्वजगतां श्रेष्ठा च या मानिता ।

यस्या एव विदन्ति धर्ममितरे द्वीपान्तरस्था जनाः
धीरः कोऽपि समुद्धरिष्यति भुवं पुण्यामिमां भारतीम् ॥

२ लोकोऽकारि सदा गतानुगतिकः स्वेच्छाप्रवृत्तैर्जनैः
यो न्यायोऽद्यतनः स एव सहसान्यायो मुहूर्तान्तरे ।
यो दण्ड्यो मधुपानतः स मनुजो यस्यामदण्ड्यः क्षणात्
धीरः कोऽपि समुद्धरिष्यति भुवं पुण्यामिमां भारतीम् ॥

३ सिद्धान्ता विविधाः कलौ नवनवा राष्ट्रीयसङ्घाहृताः
स्तूयन्ते विविधैः स्तवैश्च निपुणैः नायाति यावच्चितिः । *
सिद्धान्तैश्चयनक्रतावुपगते यस्यां हि तूलायितं
धीरः कोऽपि समुद्धरिष्यति भुवं पुण्यामिमां भारतीम् ॥

४ काकोलूकवदाचरन्ति बत ये भिन्नः स्वभावो यतः
ते चुम्बन्ति परस्परं स्फुटमहो प्राप्ये तु सिंहासने ।
कर्तव्यं बत गौरवं च विधिरप्यास्ते न यत्र क्रमात्
धीरः कोऽपि समुद्धरिष्यति भुवं पुण्यामिमां भारतीम् ॥

५ तप्तं यैर्न तपः कठोरमथ च प्राप्ता न धातुर्वराः
येषां प्रत्यय एव नास्ति निगमे येषां हिरण्येऽक्षिणी ।
क्षिप्तां केवलया निशौ विपदपां मिथ्यागिरा तादृशैः
धीरः कोऽपि समुद्धरिष्यति भुवं पुण्यामिमां भारतीम् ॥

६ पद्भ्यामेव नखंपचातपकुले वर्षास्वमेघे हिमे
क्षेत्रात् क्षेत्रमटन् समस्तजगतीं धीज्योतिषा भासयन् ।
काषायाम्बर दण्डदारुकलशैः स्वं वञ्चयित्वोदरं
धीरः कोऽपि समुद्धरन् विजयते पुण्यामिमां भारतीम् ॥

* चितिः चयनं (Election)

—ई. एस्. राममूर्तिः, कुंभघोणम्

தாயே! எல்லாம் நன்கு தங்களால் கூறப்பட்டது. என் துக்கம் என்னைவிட்டு வெகுதூரம் பிரிந்து சென்றுவிட்டது. ஆனால் ஒன்று தங்களைக் கெஞ்சிக் கேட்கிறேன். அது உடன் நிறைவேற்றத்தக்கது 84

काङ्क्षितार्थघटने तप एकं कारणं यदि भवेदिह मातः।
दुर्लभं यदखिलैरपि लोकैः तन्मया पदमवाप्तमवेहि॥

அம்மா! விரும்பியதைச் சேர்த்துவைப்பதில் தவமொன்றே காரணமாயின், உலகனைத்தாலும் பெறமுடியாத பதவி என்னால் அடையப்பட்டு விட்டதென்று அறிவாய். 85

अद्य यामि विपिनं जननि द्राक् संचिनोमि च तपांस्यतिघोरम्।
प्रीणयामि भगवन्तममीभिः दापयामि पदमिष्टमनेन॥

தாயே! இன்று காட்டிற்குச் செல்கிறேன். விரைவில் தவங்களை மிகக் கடுமையாகச் சேமிப்பேன். அவற்றால் இறைவனை மகிழ்விப்பேன். அவர் (நான்) விரும்பிய பதவியைத் தருமாறு செய்வேன். 86

सर्वदुःखमपि नौ गतमारात् अंब हस्तगतमद्य सुखं नः।
केवलं भवदसंमतिरेका नार्गलीभवतु तत्परमर्थ्यम्॥

நம்மிருவரது எல்லா துக்கங்களும் வெகுசமீபத்திலேயே நீங்கவிருக்கின்றன. தாயே! ஸுகம் நம் கைகளில் அடங்கிவிட்டது. இதில் (தவத்திற்கான) தங்கள் அனுமதியொன்று குறுக்கிடுவதாக ஆகவேண்டாம். இது ஒன்றுதான் வேண்டத்தக்கது. 87

ज्ञायते यदि पुरैव ममेदं साधितं सकलमिष्टमपि स्यात्।
किं वचोभिरपि दुःखनिवृत्तेराजगाम समयस्त्वधुनैव॥

இது என்னால் முன்னதாக அறியப்பட்டிருந்தால், (நான்) விரும்பியதனைத்தும் கிட்டியிருக்கும். வார்த்தைகளால் என்ன? துக்கம் நீங்குவதற்கான நேரம் இப்போதுதான் வந்தது. 88

एककं क्षणमपीह विलंबं नो सहेय परथा तु न वाच्यम्।
प्रस्थितोऽस्मि तपसेऽयमहं मां प्रेरयस्व रभसादनुगृह्य॥

ஒரு நொடிப்பொழுதுகூடத் தாமதத்தை இங்கு பொறுக்க மாட்டேன். வேறுவிதமாக (தடுக்கும் வகையில்) ஒன்றும் சொல்லக் கூடாது. தவத்திற்காக இதோ நான் கிளம்பிவிட்டேன். என்னைச் சீக்கிரமாக வாழ்த்தி அனுப்பிவிடுங்கள். 89

लोकोत्तरं पदमसावविलंबमेव
संप्राप्नुवंस्तव मनोमुदमातनोमि ।
मा नाम खेदमयि मत्क्षणविप्रयोगे
मातस्त्वमाश्रय मदेकतनूभवेति ॥

*உலகிற்கெட்டாத நிலையை தாமதமின்றி அடைந்து தங்களுக்கு மனமகிழ்ச்சியைத் தருவேன். தாயே! சிறிதுகாலத்திற்கான என் பிரிவில் எனது ஒரே பிள்ளை என்று வேதனையை நீங்கள் அடையக் கூடாது.* 90

भूत्वापि तादृशमनोर्महतः कुलेऽस्मिन्
एषा यदापि निकृतिर्महती सुरुच्याः ।
कामं छिनत्ति हृदयं तदिदं मदीयं
मातर्भवेयमिह न क्षणमेकमेषः ॥

*அம்மா! அத்தகைய இந்த மனுவின் குலத்தில் தோன்றியும் ஸுருசியிடமிருந்து பெருத்த இந்த அவமதிப்பு பெறப்பட்டதென்பது என் உள்ளத்தை மிகவும் பிளக்கிறது. நான் கணநேரம்கூட இங்கு இருக்கமாட்டேன்.* 91

इति दृढतरमीरयन् जनन्याः प्रतिवचनावसरं प्रतीक्षमाणः ।
तपसितुमटवीविगाहनेऽयं त्वरितमतिर्नियतं ध्रुवोऽवतस्थे ॥

*இவ்வாறு மிகத்திடமாகக் கூறியவனாகவும் தான் பதிலளிப்பிற்கான அவகாசத்தை எதிர்நோக்குபவனாகவும் தவம்புரியக் காட்டைச் சென்றடைய விரைந்த உள்ளத்தினனாகவும் துருவன் அடங்கி நின்றான்.* 92

सुब्रह्मण्यः सुचरितपरः श्रोत्रियो यं सुधीशं
सीतालक्ष्मीरपि च सुषुवे श्रीमती तादृशस्य ।
काव्ये श्लाघ्ये कविगणपतेः जैत्रजीवाख्यचंपू-
ज्येष्ठेऽमुष्मिन् ध्रुवचरितनाम्न्येष सर्गश्चतुर्थः ॥

इति ध्रुवचरितमहाकाव्ये चतुर्थः सर्गः समाप्तः ॥

*நன்னடத்தையையே முக்கிய நோக்காகக் கொண்ட ச்ரோத்திரியரான ஸுப்பிரமண்யரும் பெருமறச் செல்வங்கொண்ட ஸீதா லக்ஷ்மியும் எவரைப் பிள்ளையாகப் பெற்றனரோ, அந்த கவிகணபதி*

யின் புகழ்த்தக்கதும் ஜைத்ரஜீவம் என்ற சம்பூகாவியத்திற்கு முன் தோன்றியதுமான துருவ சரிதம் எனும் காவியத்தில் இது நான்காவது படைப்பு.

துருவ சரிதம் நான்காவது ஸர்க்கம் முற்றிற்று.

---

## पञ्चमः सर्गः

तपसे कृतनिश्चयेन सा तनयेनैवमुदीरिता दृढम् ।
सुतदर्शनमात्रजीविता क्षणमज्ञानविमूढधीरभूत् ॥

தவத்தைப்பற்றிய முடிவு செய்துவிட்டவனை பிள்ளையால் திடத்துடன் இப்படிக் கூறப்பட்டவளும் பிள்ளையைக் காண்பதொன்றையே உயிராகக் கொண்டவளுமான, அவள் ஒரு நொடிநேரம் அறியாமையால் மயங்கிய புத்தியுள்ளவளாக ஆனாள். 1

तपसोऽतिकठोरतां ततस्तनयस्याप्यतिबालतामसौ ।
परिमृश्य च तस्य निष्ठुरं व्यवसायं च हृदि व्यचिन्तयत् ॥

உடன் அவள் தவத்தின் மிகக் கடோரத்தன்மையையும் பிள்ளையின் மிக இளமையையும் அவனது உணர்ச்சிகளால் இறுகிய தீர்மானத்தையும் நன்கு பகுத்தறிந்து மனத்தில் யோசித்தாள். 2

क्व घनं विविधापदां निधिः क्व नु वा क्षीरगलोऽयमर्भकः ।
क्व तपः कठिनैश्च दुश्चरं क्व शरीरं भृशमस्य कोमलम् ॥

பல்வேறு ஆபத்துகளுக்கு இருப்பிடமான காடு எங்கே! பாலையே உணவாகக் கொண்ட (பால் ஒன்றையே தொண்டை கண்டிருக்கும் நிலையிலுள்ள) இந்தச் சிறுவன் எங்கே! (பாறை போன்று) இறுகிய உடற்கட்டு கொண்டவர்களாலும் புரியமுடியாத தவம் எங்கே? மென்மையுள்ள இவன் உடல் எங்கே! 3

इदमस्य पुनस्तपोविधौ अनिवार्यप्रसरं च कौतुकम् ।
किमहं करवै गतिश्च का मम शोकोऽद्य महानुपस्थितः ॥

தவம்புரிவதில் தடைசெய்ய முடியாத ஈடுபாடு கொண்ட இவனது இந்த உற்சாகம். நான் என்ன செய்வேன்? எது என் வழி? எனக்கு மிகப்பெரிய சோகம் முன்வந்துள்ளது. 4

मम वत्समुखेन्दुदर्शने क्षणमेकं भविता कथं स्थितिः ।
इति भाविवियोगचिन्तया ध्रुवमाता हृदि बह्वतप्यत ॥

குழந்தையின் சந்திரன் போன்ற முகத்தை பார்க்காதபோது ஒரு நொடிப் பொழுதிலும் என் நிலை எப்படி இருக்கும்? என்று வரவிருக்கும் பிரிவைப்பற்றிய கவலையால் துருவனின் தாய் மனத்தில் மிகவும் வருந்தினள். 5

स्वयमुद्गलदश्रुगर्भया तनयं वीक्ष्य दृशाऽथ दीनया ।
करुणार्द्रमयानि सा तदा कथयामास वचांसि कानिचित् ।

வேதனையுள்ளதும் தானே கொப்பளிக்கும் தண்ணீர் நிரம்பியதுமான கண்ணால் புதல்வனை பார்த்துக் கருணையால் நனைந்த சில சொற்களை அவள் அப்போது கூறினள். 6

भवदेकगतिं विहाय मां अतिबाल्ये वयसीह बालक ।
नियतं विपिनं व्रजाम्यसाविति वादः किमु युज्यते तव ।

குழந்தாய்! உன் ஒருவனையே கதியாகக்கொண்ட என்னைச் சிறு வயதில் இங்கு விட்டுவிட்டுக் கட்டாயம் இதோ காட்டிற்குச் செல்கிறேன் என்ற உன் பேச்சு பொருந்துமா? 7

क्षणमेकमदर्शने तव व्यथते मे हृदयं सुदुस्सहम् ।
तव तस्य कथं वदाटवीगमनं संमनुतामिदं मनः ॥

உன்னை ஒரு கணம் பார்க்காததில் என் மனம் தாங்கமுடியாதபடி வேதனைப்படுகிறது. அந்த நீ காட்டிற்குச் செல்லுவதை இந்த மனம் எப்படி ஒப்புக்கொள்ளும்! சொல். 8

अयि किं किमचारिषं व्रतं कति देवाश्च भवत्कृतेऽर्चिताः ।
कतिभिः सुत दुष्करैस्तपोनियमैस्त्वाममुमाप्तवत्यहम् ॥

ஏய் குழந்தாய்! உன்பொருட்டு என்ன என்ன விரதத்தைச் செய்தேன்? எத்தனை தேவதைகள் வழிபடப்பட்டார்கள்? செய்வதற்கரிய எத்தனை தவ நியமங்களால் இந்த உன்னை நான் அடைந்துள்ளேன்! 9

कथमप्यकुतोगतेश्चिरात् प्रतपन्त्या मम नन्दनो ध्रुवः ।
अवलंबनमेकमस्य मे जनितस्त्वं जनुषान्धयष्टिवत् ॥

ஏய்! வேறு கதி இல்லாதவளும், மிகவும் நொந்திருப்பவளுமான எனது மனத்திற்குக் களிப்பூட்டுபவனுகப் பிறவிக்குருடனுக்குக் கைத்தடி போல் ஒரே பிடிப்பாக நீ பிறந்தாய். 10

श्रीगुरुभ्यो नमः

॥ संस्कृतश्रीः ॥

पाठमाला अनुबन्धः ८६ பாடமாலா தொடர் 86

सप्तोत्तरशततमः पाठः—பாடம் 107

# रामो लंकाया अयोध्यां प्रत्यावर्तते

(रघुवंशात्)

முன்னுரை: सरिगमपधनिसाः सप्त स्वराः संगीतस्य। तेषां अवान्तरभेदैः विन्यासभेदैश्च अनन्ता रागा जाताः। रागैः तालैश्च निबद्धानि श्रीत्यागराजादीनां कीर्तनानि। न जानीमो वयं, यथा श्रीत्यागराजादयः तानि कीर्तनानि अगायन्। अद्यत्वेऽपि गायकाः तानि कीर्तनानि तेष्वेव रागतालेषु गायन्ति, किन्तु स्वमनोविलासानुरूपं स्वरकल्पनाभिः नवं नवं गायन्ति। प्रतिगायनं नव वैचित्र्यं निवेशयन्ति।

वाल्मीकिः आदिकविः। आदिकाव्यं रामायणम्। तद् अनुसृत्य कालिदासः रामचरितं वर्णयति स्म। रामचरितं वर्णयितुमेव रघुवंशकाव्यं व्यरचयत्। रामायणे रामस्यायोध्याप्रत्यागमनं अपठाम। कालिदासः तमेव सन्दर्भं स्वप्रतिभया यथा विचित्रं अवर्णयत् तथा अधुना पठामः।

கடின பதவுரை: अवान्तरभेदाः உட்பிரிவுகள். विन्यासः அமைப்பு. अनन्त எல்லையற்ற. अद्यत्वे இந்நாட்களில் Now a days. मनोविलासानुरूपं மன எழுச்சிக்குத் தக்கபடி. नवं नवं புதுப் புது விதமாக. गायनं கச்சேரி. वैचित्र्यं புதுமை. सन्दर्भं வரலாற்றுப் பகுதி. प्रतिभा மதிநுட்பம்.

## வசன நடை

1 वैदेहि आमलयात् मत्सेतुना विभक्तं फेनिलं अंबुराशिं पश्य। शरत् प्रसन्नं छायापथेन विभक्तं आविष्कृतचारुतारं आकाशं इव भाति।

2 अस्मात् अर्कमरीचयः गर्भं दधति। अत्र वसूनि विवृद्धिं अश्नुवते। असौ अबिन्धनं वह्निं बिभर्ति। अनेन प्रह्लादनं ज्योतिः (चन्द्रः) अजनि।

3 यियक्षोः गुरोः मेध्ये तुरंगे कपिलेन रसातलं संक्रमिते, तदर्थं उर्वीं अवदारयद्भिः नः पूर्वैः अयं परिवर्धितः।

4 असौ अनन्यसामान्यकलत्रवृत्तिः। (अस्य गंगादयः नद्यः कलत्राणि) मुखार्पणेषु प्रकृतिप्रगल्भाः ताः स्वयं तरंगाधरदानदक्षः असौ पिबति पाययते च *(पश्य)*।

5 विवृताननत्वात् ससत्त्वं नदीमुखांभः आदाय संमीलयन्तः अमी तिमयः सरन्ध्रैः शिरोभिः ऊर्ध्वं जलप्रवाहान् वितन्वन्ति।

6 सहसा उत्पतद्भिः मांतगनक्रैः द्विधाभिन्नान् समुद्रफेनान् पश्य। ते कपोलसंसर्पितया एषां क्षणचामरत्वं भजन्ति।

## செய்யுள் நடை

1 वैदेहि पश्यामलयाद्विभक्तं मत्सेतुना फेनिलं अंबुराशिम्।
छायापथेनेव शरत्प्रसन्नं आकाशमाविष्कृतचारुतारम्॥

2 गर्भं दधत्यर्कमरीचयोऽस्मात् विवृद्धिमत्राश्नुवते वसूनि।
अबिन्धनं ज्योतिरसौ बिभर्ति प्रह्लादनं ज्योतिरजन्यनेन॥

3 गुरोर्यियक्षोः कपिलेन मेध्ये रसातलं संक्रमिते तुरंगे।
तदर्थं उर्वीं अवदारयद्भिः पूर्वैः किलायं परिवर्धितो नः॥

4 मुखार्पणेषु प्रकृतिप्रगल्भाः स्वयं तरंगाधरदानदक्षः।
अनन्यसामान्यकलत्रवृत्तिः पिबत्यसौ पाययते च सिन्धूः॥

5 ससत्त्वमादाय नदीमुखाम्भः संमीलयन्तो विवृताननत्वात् ।
अमी शिरोभिस्तिमयः सरन्ध्रैः ऊर्ध्वं वितन्वन्ति
जलप्रवाहान् ॥

6 मातंगनक्रैः सहसोत्पतद्भिः भिन्नान् द्विधा पश्य
समुद्रफेनान् ।
कपोलसंसर्पितया त एषां व्रजन्ति कर्णक्षणचामरत्वम् ॥

கடின பதவுரை: आमलयात् மலயமலைவரை. फेनिलं நுரை மிகுந்த. अंबुराशिः கடல். छायापथं பால்வழி. GALAXY the lumninous band of Stars stretching across the heavens. शरत्-प्रसन्नं சரத் காலத்தில் தெளிந்திருக்கிற. आविष्कृतचारुतारं ஒளிருகின்ற அழகிய நட்சத்திரங்கள் உள்ள. दधति ஏற்கின்றன. अर्कमरीचयः சூர்யகிரணங்கள். वसूनि முத்து பவழம் போன்ற உயர்ந்த பொருள்கள். अश्नुवते பெறுகின்றன. अबिन्धनं ज्योतिः வடவாக்னி. प्रह्लादनं ज्योतिः சந்திரன். बिभर्ति தாங்குகிறது. अजनि உண்டாக்கப்பட்டது. यियक्षोः யாகம் செய்ய விரும்பிய. गुरोः முன்னோரின் (ஸகரருடைய). मेध्य புனிதமான. संक्रमिते கடத்தப்பட்டபோது. उर्वी பூமியை. अवदारयद्भिः பிளக்கின்ற. पूर्वैः முன்னோர்களால். கடலுக்கு "ஸாகரம்" என்று பெயர் அல்லவா. मुखार्पणं முகம் தருவது. प्रकृतिप्रगल्भाः இயற்கையாகவே திறமையுள்ள. दक्षः திறமையுள்ளவன். अनन्यसामान्य மற்றவர்க்கு கிட்டாத. कलत्रवृत्तिः மனைவிகள் நலம் பெற்ற. सिन्धुः (பெ. பா) ஆறு. सिन्धुः (ஆ. பா) கடல். पाययते குடிக்கச்செய்கிறான். சுவைக்கச்செய்கிறான். ससत्त्वं பிராணிகளுடன் கூடிய. संमीलयन्तः மூடுகின்ற. विवृताननत्वात् திறந்த வாயுள்ளவையாக இருப்பதால். सरन्ध्रैः துவாரங்கள் உள்ள. मातंगनक्रः நீர்யானை. कपोल संसर्पितया காதில் வழிவதால். कर्णक्षणचामरत्वं காதுகளில் சிறிது நேரம் சாமரமாயிருக்கும் தன்மையை.

அறிவிப்பு:- $3\frac{1}{2}$ ஆண்டுகளாயிற்று கற்கத்துவங்கி. ஸம்ஸ்கிருதப் படிப்பின் பல பயன்களுக்குள் இலக்கிய ரஸனைக்கு முதலிடம் என்பது என் எண்ணம். காளிதாஸனது கவிதையும் எளியவையே. ஆனால் கற்பனைகள் கொஞ்சம் அதிகம். அதன்

நயங்களை ரஸிக்கவேண்டும். ஆகவே சில விளக்கங்கள் எண் வரிசைப்படி தரப்படுகின்றன.

1. கடலை வானத்துடன் ஒப்பிடுகின்றான். நுரை நக்ஷத்திரங்கள் போல்— அணை பால் வழிபோல்.

2. சூரியகிரணங்கள் நீரை உறுஞ்சி சூல்கொள்கின்றன. வடவாக்னி நீரையே விறகாகக் கொண்டது என்பது முன்னோர் கருத்து. பாற்கடலிலிருந்து சந்திரன் உதித்ததை இவ்வாறு கூறுகின்றான்.

3. ஆறுகள் கடலுடன் கலக்குமிடத்தைமுகத்துவாரமென்பர். நதிகள் (காதலிகள்) முத்தமிட முகம் தருவதில் வல்லமை பெறுகின்றன. கடலும் அலைகளாம் உதடு இதழ்களைக் கொண்டு அவர்களுக்கு முத்தம் தருகின்றான். இவ்வாறு இன்பம் துய்ப்பதில் நயம் பெற்ற தம்பதிகள் அரிது என்கிறான்.

4. கடலில் திமிங்கிலங்களை வர்ணிக்கிறான்.

5. நீர் யானைகள் திடீரென்று வெளியே எழும்போது நுரைகள் வழிவதை வர்ணிக்கிறான்.

## வசன நடை

7 एते वयं विमान वेगात् सैकत-भिन्न-शुक्तिपर्यस्त मुक्तापटलं फलावर्जित पूगमालं पयोधेः कूलं प्राप्ताः पश्य ।

8 विमानं क्वचित् सुराणां पथा संचरते । क्वचित् घनानां, क्वचिच्च पततां (पथा संचरते)। मे मनसः अभिलाषः यथाविधः, तथा विमानं प्रवर्तते पश्य ।

9 अमी चीरभृतः जनस्थानं अपोढ विघ्नं मत्वा चिरोज्झितानि समारब्धनवोटजानि आश्रममण्डलानि यथास्वं अध्यासते ।

## காளிதாஸனது செய்யுட்கள்

7 एते वयं सैकतभिन्न शुक्तिपर्यस्तमुक्तापटलं पयोधेः ।
प्राप्ता मुहूर्तेन विमानवेगात् कूलं फलावर्जित पूगमालम् ॥

8 क्वचित् पथा संचरते सुराणां क्वचित् घनानां
पततां क्वचिच्च ।
यथाविधो मे मनसोऽभिलाषः प्रवर्तते पश्य तथा विमानम् ॥

9 अमी जनस्थानमपोढविघ्नं मत्वा समारब्धनवोटजानि ।
अध्यासते चीरभृतो यथास्वं चिरोज्झितान्याश्रममण्डलानि ॥

R. N. 30478/77—SAMSKRITA SRI—22-7-81
TN/TR/53 Dt. 1-10-80 S. S. P. TRICHY.



Printed by S. Naganathan, at Theni Printers, Trichy. Edited by Vaidya S. V. Radhakrishna Sastri and Published by A. Kuppuswamy, B. A., B. T., on behalf of the Samskrit Education Society, (Regd.) Trichy Branch : 9, Single Mall Street, Tiruchirapalli-620 002.